अथापवादो निरूप्यते। अपवादो नाम बाधः। स द्विविधः। श्रौतो यौक्तिकश्च। श्रौतो नाम श्रुतिसिद्धान्तेनोपपाद्यते। तत्र साधनत्रयमपेक्ष्यते। तत्र श्रवणेन श्रौतबाधः। मननेन च यौक्तिकः। श्रवणं मननं निदिध्यासनमिति साधनत्रयम्। श्रुतिवाक्येभ्यः समन्वयेन श्रवणम्। तद्द्विविधम्। अवांतरवाक्यश्रवणं महावाक्यश्रवणं च। अवांतराणि वाक्यानि परोक्षज्ञानजनकानि। ब्रह्मास्तीति परोक्षज्ञानम्। अपरोक्षज्ञानजनकानि महावाक्यानि। अहमेव ब्रह्मेत्यपरोक्षज्ञानम्। तत्रादौ समन्वयेन यच्छ्रवणं तत् सांप्रदायिकानाम्। उत्तमाधिकारिणां तु श्लोकेन श्लोकार्धेन श्लोकपादेनापि ज्ञानं जायते। तेनैव तस्य कृतकृत्यता स्यात्। येषां सकृदुपदेशमात्रेण बोधो न जायते तेषां समन्वयेन श्रवणं स्यात्। तदपि नैकवारश्रवणेन श्रवणं स्यात्। किंत्वावृत्तिरसकृदुपदेशादिति सूत्राद्बहुवारश्रवणमेव विधीयते।



# मात्रमृतपानम्

( गंगास्थितिनिर्णयः )

उमा माता पिता शंभुर्गुरुर्ज्ञानेश्वरो महान्
पतिः कृष्णो राधिकाद्या भगिन्यो गोपिका मम ॥१॥
पंचायतनमित्येतत् हृद्यास्थाप्य प्रपूज्य च
गंगायाः क्षीरपानाय लक्ष्येते तत्पदेऽधुना ॥२॥
संकीर्णानां सवर्णानां पुण्यपापवतामपि
गंगास्नानाद्गतिर्नान्या निश्चयः सुदृढो मम ॥३॥

सर्वेषां पापानां गंगैवैका गतिरस्ति। धर्मोऽपि तयैवैकया साध्यते इति श्रुतिस्मृतिपुराणेतिहासानामभिप्रायः। तथापि संशयाटवीमटंतो जीवंत एव नरके विहरंतो पुराणैकवचनं कक्षीकुर्वंतः सुजनानपि मोहयंतो गंगा कलौ गमिष्यतीति मुखरयंति। तत् किमसत्यमाहोस्वित्सत्यमिति संशय-परिमार्जनाय तान् वाचालानादौ पृच्छामः। किमियं माता गंगा स्वपुत्रान् विहाय वैकुंठं गच्छतीति श्रुत्या प्रतिपाद्यते स्मृत्या पुराणेन युक्त्याऽनुभवेन वा। नाद्यः श्रुतिषु भूमावेवास्याः स्थितिवर्णनात् श्रुतीनां च सर्वलोकप्रामा-ण्यात्। स्वर्गीयगंगाया एव तत्र वर्णनमिति मा शंक्यम्। गंगासंगेन प्रयाग-महात्म्यस्य वेदे श्रवणात्। "यत्र गंगा च यमुना च यत्र प्राची सरस्वती। सोमेश्वरो देवस्तत्र माममृतं कृधींद्रा यत्र येन्दो परिस्रव (ऋग्वेद अष्टक ७ अध्याय ५ वर्ग २८ परिशिष्ट) "सितासिते सरिते यत्र संगथे तत्राप्लुतासो दिवमुत्पतंति। ये वै तन्वं विसृजंति धीरास्ते जनासो अमृतत्वं भजंते" (ऋग्वेद अष्टक ८ अध्याय ३ परिशिष्ट) अत्र मृताः स्वर्गं गच्छंतीति स्पष्टं श्रुतिवचनम्। नहि स्वर्गीयाणां गंगायां मृतानां स्वर्गांतरं कल्पयितुं शक्यम्। ययात्यादीनां

प्रवृत्त्यदर्शनात् । ननु "एषा देवनदी पुण्या पार्थ त्रैलोक्यपावनी । आकाशगंगा राजेंद्र तत्राप्लुत्य गमिष्यसि । अत्र स्नातस्य भावस्ते मानुषो विगमिष्यति । गतशोको निरायासो मुक्तवैरो भविष्यसि" ॥२८॥२९॥ (स्वर्गारोहणपर्व अ. ३) टीका—मनुष्याणां यत्र गतिर्नास्तीत्याह देवनदीति । न सा भूमौ वर्तते इत्याहाकाशगंगेति ॥२८॥ दैवीं तनुं प्राप्स्यसीत्यभिप्रायः ॥२९॥ इति स्वर्गगास्नानेन त्वं मानुषीं तनुं त्यक्त्वा दैवीं तनुं प्राप्स्यसीति स्वर्गारोहणवचनेन सितासिते सरिते यत्रेति श्रुतेरुपबृंहणं कर्तव्यम् । "इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् । बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यतीति" स्मार्तविधेः । भारतस्येतिहासत्वं तु पंचमवेदत्वेन श्रीमद्भगवत्पूज्यपादाचार्यैरुक्तं छांदोग्यभाष्ये सप्तमाध्याये प्रथमखंडे "इतिहासपुराणं वेदं वेदानां भारतपंचमानां वेदं व्याकरणमिति । व्याकरणमित्यनेन कथमवेदेन भारतेन वेदस्योपबृंहणमित्यपास्तम् । अतो न भूलोके तस्याः स्थितिरिति चेदुच्यते । भ्रमोऽयं पूर्वपाक्षिणः । तत्र युधिष्ठिरस्य स्वर्गारोहणदेशे प्रयागशब्दस्य यमुनायाश्चाश्रवणात् । वेदे तु सरस्वतीयमुनाभ्यां सह गंगायाः संगमः श्रूयते । न हि स्वर्गे तथा श्रूयते कुत्रापि । उपनिषत्स्वपि गंगया सह काशीमहात्म्यमस्ति । इत्येवं श्रुत्या गंगास्थितिनिर्णयः । भगीरथेनानीता गंगेत्यादिकं सर्वमितिहासैर्यद्यपि कल्पितं तथाप्यनादिरेवास्याः स्थितिर्भूलोके इति स्पष्टं निश्चीयते । न हि भगीरथानंतरा वेदाः कल्पयितुं शक्याः । तेषामनादित्वग्रहणात् । नापीश्वरमधिक्षिपद्भिर्कर्मकांडं कक्षीकुर्वद्भिर्मीमांसावादिभिर्गंगास्थितिः प्रतिक्षिप्ता । एवं गंगायाः स्थितिलाभस्तु श्रुतौ प्रत्यक्षोऽस्ति । परंच क्वचिदपि गंगाया गमनं नोक्तं श्रुतौ । यत्तु स्मृतिपुराणेषु गंगाया गमनं दृश्यते तच्छ्रुतिविरोधाद्धेयमेव । न हि श्रुतिवचनानां स्मृतिपुराणवचनैर्बाधः कर्तव्यः । उपबृंहणमपि श्रुत्यर्थसाधनं न बाधनमित्युच्यते । अन्यथा गायत्रीमंत्रादपि पिशाचमंत्राणां प्रामाण्यापत्तेः । ज्ञानादपि चोपासनाप्रामाण्यापत्तेश्च । उपबृंहणं नाम वेदे यत्संक्षिप्तं तद्विस्तरेण पुराणेषूक्तमिति ।

ननु वेदेभ्योप्यादौ पुराणोत्पत्तिर्ब्रह्मणो मुखादिति मात्स्ये "पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम्। नित्यं शब्दमयं पुण्यं शतकोटिप्रविस्तरम् ॥३७॥ अनंतरं च वक्त्रेभ्यो वेदास्तस्य विनिःसृताः" इति। छांदोग्ये[1] बृहदारण्यके[2] च वेदैः सह पुराणानामपि विद्यात्वं छांदोग्यभाष्यकृद्भिस्तत्र भारतस्य ग्रहणात्प्रसिद्धान्येव पुराणानीति चेत्सत्यम्। तथाप्यस्तु श्रुतिसमप्रामाण्यं पुराणानाम्। किंतु न श्रुतिबाधकरणे सामर्थ्यं तेषाम्। एवं श्रुतिभिस्तु मातुः स्थितिर्निर्णीता। श्रुत्यनुकूलः समन्वयोऽपि यथा स्यात्तथा चोक्तः। पुराणवाक्यानां संगतिरितरस्मिन्नध्याये निर्णेष्यामः।

हरिः ॐ तत्सत् श्रीगंगामात्रमृतपाने मातुश्चरणस्थाने श्रुतिविचारो नाम प्रथमः कवलः।

## द्वितीय कवलः

अथ पुराणवचनानां समन्वयमाह। पुराणैकदेशं कक्षीकुर्वाणा यानि वचनानि चोदाहरंति तान्येवादौ प्रदर्श्यंते। पंचसहस्रवर्षाणि कलौ गंगा तिष्ठति तदनंतरं गमिष्यतीति सनत्कुमारसंहितायाम्। ब्रह्मवैवर्तेऽपि भगवन्निजधामगमनकालेऽस्माकं का गतिर्भगवन्निति गंगाप्रश्ने भगवदुक्तं "कलेः पंचसहस्राणि वर्षाणि तिष्ठ भूतले (ब्रह्मवैवर्त अ. १२९ कृष्णजन्मखंड श्लो. ५१) पंचसहस्रहायनांते कलौ स्थित्वा पुनरागामिष्यसीति। सरस्वत्याः शापाद्गंगा पंचसहस्रहायनानि भूलोके स्थित्वा पुनर्वैकुंठं गतेति। "कलेः पंचसहस्रं च वर्षं स्थित्वा च भारते। जग्मुस्तत्र सरिद्रूपं विहाय श्रीहरेः पदम्" (ब्रह्मवैवर्त अ. ७ श्लो. ४०)। इत्येतानि वचनानि पूर्वपक्षिणोदाह्रियंते। तत्रास्माकमयं प्रश्नः। किमेतेषां वचनानां विरोधीनि वचनानि न प्रदर्श्यंते पुराणेषु वा। मात्स्ये प्रयागमहात्म्ये "कल्पान्ते तत्समग्रं हि

१ छांदोग्य ७।१।२ — २ बृहदारण्यक २।४।१०

रुद्रः संहरते जगत् । तदा प्रयागतीर्थं च न कदाचिद्विनश्यति ( मत्स्यपुराण अ. १११ श्लो. ४ ) इदं प्रयागक्षेत्रं सृष्टिप्रलयेऽपि न नश्यति । तथाच स्कंदपुराणे काशीखंडे चोक्तमियं भागीरथीयुता काशी त्रिशूले धृत्वा महादेवः प्रलयेऽधितिष्ठतीति । तथा च भगीरथवरसमये यावच्चंद्रदिवाकरौ तावन्मत्पुण्यप्रवाहबलात्ते कीर्तिर्भविष्यतीति स्पष्टम् । योगवासिष्ठेऽपि भगीरथेन महात्मना गंगाऽत्र समानीता सा नित्यैवात्रेत्युक्तम् । पुनश्च महाभारतेऽपीयं गंगा सर्वेषां पापानां परिहर्त्री सर्वदैव मातेव बालान् पास्यतीति । कौर्मेऽपि तथैवोक्तम् । "कृते तु नैमिषं क्षेत्रं त्रेतायां पुष्करं वरम् । द्वापरे च कुरुक्षेत्रं कलौ गंगा विशिष्यते । कृते च सर्वतीर्थानि त्रेतायां पुष्करं तथा । द्वापरे च कुरुक्षेत्रं कलौ गंगैव केवला" । सर्वाणि तीर्थानि कलौ गंगायां स्वसामर्थ्यं क्षिप्त्वा जनानुद्धारिष्यंति किंतु गंगा तु स्वयमेव जनानुद्धरिष्यति । न तु स्वसामर्थ्यं कुत्रापि क्षिपतीति चान्यत्र विद्यते । यत्तु सिंहस्थयात्रादिसमये गोदावर्यादीनां महात्म्यं श्रूयते तदपि गंगोपजीवितयैव न स्वातंत्र्येण । काशीस्थभागीरथ्येव तत्रागतवतीत्यादि-लोकप्रवाददर्शनात् । यत्तु श्रीमत्तुकारामैः काश्या अपि पंढरीमहात्म्यमधि-कमुक्तं तत्तु तातकूपभक्तवत्सात्विक्या श्रद्धया न तु शास्त्रीयश्रद्धया । काश्या माहात्म्यमपि गंगागमनादेवाधिकमिति काशीखंडे चोक्तम् । पुरा मणिकर्णिका नाम तीर्थं काश्यामासीत् । किंतु भागीरथ्या महात्म्यं ततोऽपि दशगुणम-धिकम् । हरिद्वारः प्रयागश्च वाराणसी कुरुक्षेत्रं हिमालयश्चेत्येतानि पंचक्षे-त्राणि घोरेऽपि कलौ स्थित्वा जनान् पास्यंति । गंगा तु सर्वत्र सर्वदैव । उपर्युक्तानि क्षेत्राण्यपि गंगाद्वारैवेत्यन्यत्र । सर्वेषामेषां वचनानां विरोधः परिहार्यः । स यथा । यानि गंगागमनवचनानि श्रूयंते तानि तु भूतकल्प-पराणीति केचित् । वस्तुतस्तु वरशापौ परस्परभाषणादिदर्शनात् देवतानावेम शक्यौ । यथा शंतनुस्त्री गंगा जाता । सा न जलरूपेण किंतु देवतारूपेण तद्वच्छापसमुद्भवोऽपि देवतारूपेणैवेति तदेत्थं योजना । गंगायाः शापस्तु

यदा विनष्टो भवेत् तदा वैकुंठगमने तस्या देवताया अप्रतिबंध इति लीला-मात्रोऽर्थः । भूलोके गंगाया अनादिस्थितौ श्रुतिप्रामाण्यसत्वे गंगाया भगीरथानयनं तु शंखासुरेण नीतानामनादिवेदानां मत्स्यावतारानयनवज्ज्ञेयम्। रुक्मांगदप्रकटितानादिहरिदिनमहात्म्यवन्महात्म्यप्रकटनं वा ।

• इहिः ॐ तत्सत् श्रीमात्रमृतपाने पुराणावाक्यविचारो नाम द्वितीयः कवलः

## तृतीय कवलः

अथ युक्तिकवलारंभः । किमेतद्गंगामहात्म्यं देवतायाः प्रचक्ष्यते उत जलस्य । आद्ये शापादीनां देवतायाः परिपक्षग्रहणाद्गंगायाः गमनं भविष्यतीति तत्र सामर्थस्याऽपि नाशः स्यात् । द्वितीये जलस्य प्रत्यक्षत्वात् प्रत्यक्षगंगामहात्म्यं कुत्रापि न दृश्यते । वैकुंठादीनां तत्स्वामिनां च परोक्षतयैवोपलब्धिर्न प्रत्यक्षतया । उपासनायाः कर्तृतंत्रत्वाच्छ्रद्धाजाड्याच्च वस्तुतंत्रेणापि गंगाया महात्म्यं न गृहीतुं शक्यते । इति प्राप्ते ब्रूमः । या यस्याभिमानी देवता भवति तस्या रूपद्वैविध्यं जायते । तद्रूपेण स्वशरीरेण च । यथा सूर्यस्य भगवतस्तेजोरूपेण रथस्थवेदत्रयमूर्तिरूपेण च शरीरदर्शनात् तद्वद्गंगाया अपि जलरूपेण गोलोकादिगोचररूपेण चेति देवताशरीरं द्विविधम् । तत्र द्वितीये भावनादिगोचरं स्यात् । तथा भगवान् सूर्य आद्येन शरीरेण लोकान् द्योतयति द्वितीयेन च भक्ताननुभावयति । तथा भगवती गंगाऽपि पापं दूरीकृत्य प्रथमेन शरीरेण द्वितीयेन च भक्ताननुभावयति स्वस्वलोकादिव्यवहारञ्च करोति । ननु पार्थिवत्वेन च शरीरस्योपलंभाज्जलरूपेण शरीरमघटमानमिति चेन्न । जलरूपेण शरीरं नैय्यायिकैः स्वीकृतमस्ति । तथापि तत्र हस्तपादादिकल्पना मानुषशरीरवदशक्येति चेन्न । नहि देवानां मानुषशरीरवत् स्थाननियमितैरिंद्रियैर्व्यवहारो भवति तेषां सत्ववैशेष्यात् । सत्व वैशेष्येण हि भौतिकानां प्राकृतानां वेंद्रियाणां सर्वदा सर्वत्र प्रकाशसंभवात्

नियमनविशेषस्य तमसोऽभावाच्च । नेश्वरस्यापि नियामकत्वे तमस्तं नियम्यस्यैव नियमनप्राबल्येनाभिभूतत्वात् । देवतानां मानुषशरीरसमानवर्णनं तु तत्तदुपासनागोचरीकर्तव्यतया प्रतिभाति । अन्यथा चतुर्मुखपंचमुखच-तुर्भुजादिष्वप्ययाथार्थ्यात् । अतो जलोपहितेन देवताशरीरेणैव भगवती गंगा पास्यति । तत्र तदुपाधित्यागात् सर्पत्वकृत्यागवत् गमनवाक्यानां सामर्थ्यविनाशेऽर्थसंभावना स्यादिति चेन्न । जलस्यैव तद्रूपत्वदर्शनात् । "तत्राप्लुतासो" इत्यादि श्रौतपदेन "भवत्तीरवानीरवातोत्थधूलीलवस्पर्श-तस्तत्क्षणं क्षीणपापः" "तव शिवजललेशं वायुनीतं समेत्य सपदि निरय जालं शून्यतामेति गंगे" तज्जलानिल एव पुनातीत्यादि स्मार्तपदेन चैतदुपलंभादा-चार्यैः काव्यकारैरपि जलस्य महात्म्यवर्णनाच्च । सर्पत्वच इवोपाधित्यागस्या-प्रत्यक्षत्वादननुमानत्वात् शाब्दे गले पतिते तत्र विरोधाभावात्पूर्वकवलयोस्तत् सिद्धत्वात् सर्वमपास्तम् । जलमयमूर्तिस्तु "सेयं वाङ्मयी मूर्तिरित्यादिव-ज्ज्ञेयम् । न भौतिकत्वशंकाऽपि कार्या दैविकसामर्थ्यस्याप्रतिबंधात् । तदभि-प्रायेणैव "गंगाजललवकणिका पीते"त्याद्याचार्यकामधुकूप्रवृत्तिः । वस्तुतंत्रत्वं तु तस्यास्तीरबिभत्सत्वेऽपि शृंगारानंदप्रदर्शनान्नश्यतीति चेन्न । ऋतुकालीनकामि-नीभूषाहानिभूषणादिवत् प्रत्यक्षदर्शनात् । न परोक्षज्ञानस्य सर्वथा कर्तृतंत्रत्व-मनुमानस्य वस्तुतंत्रत्वात् । नापि देशनामश्रवणेन देशस्य कर्तृतंत्रत्वं दृश्यते । यत्तु उपासनायां कुत्रचित्कर्तृतंत्रश्रद्धया कलातिशयो धर्ममनपे-क्ष्यापि शिलपिल्लादिवत् दृश्यते तत्र तदुपहितेश्वरस्य ग्रहणाद्वस्तुतंत्रोप-जीवितयैवेति ज्ञेयम् । अतिशयस्तु वस्तुनैकस्थ्यकरणाद्यभावेन मूढानामेव । स्यादेतत् । देवताया वस्तुतंत्रत्वं न जलस्येति चेन्न । कर्तृतंत्रस्य यावद्दार्ढ्य-मनेकवारप्रसक्तिश्रवणात् । अत्र चैकवारप्रसक्त्या कार्यसिद्धिश्रवणात् सुगुणैश्च । तद्यथा-"समृद्धं सौभाग्यं सकलवसुधायाः किमपि तत् । महैश्वर्यं लीलाजनितजगतः खंडपरशोः । श्रुतीनां सर्वस्वं सुकृतमथ मूर्तं सुमनसां । सुधासौदर्यं ते सलिलमशिवं नः शमयतु" । सौभाग्यमित्यनेन

सर्वदा मंगळप्रदत्वमुक्त्वा महैश्वर्यमित्यनेन सर्वसामर्थ्यवत्वं सूचितमस्ति । महेश्वराज्ञातत्वाच्छ्रुतिवदीश्वरजत्वम् । श्रुतीनां यो धर्मः स तत्रैव साध्यतेऽतः श्रुतीनां सर्वस्वम् । सुमनसां सुकृतं मूर्तमित्यनेन न जीवपुण्यकृतमित्युक्तम् । न हि जीवस्य पुण्यं क्वचिदपि मूर्तत्वेन प्रतिभाति । अत ईश्वरस्य सत्यसंकल्पत्वात्तस्यैव मूर्तं सुकृतम् । सत्यसंकल्पत्वेन मूर्तत्वेनोपलंभात् । बहुमानार्थं बहुवचनम् । सुष्ठु धारणमेव शोभनम् । अथवा सुधाऽमृतं तत्सौंदर्यं सहोदरत्वेनामरकरणे सामर्थ्येऽपि सलिलत्वे सत्याशिव–शामकत्वेनाधिकत्वं दर्शयति । एवं गुणानुक्त्वा वस्तुतंत्रत्वमाह । "दरिद्राणां दैन्यं दुरितमथ दुर्वासनहृदाम् । द्रुतं दूरीकुर्वन् सकृदपि गतो दृष्टिसरणिम् । अपि द्रागाविद्याद्रुमदलनदीक्षागुरुरिह । प्रवाहस्ते वारां श्रियमयमपारां दिशतु नः" । अत्युत्कटपुण्येन प्रारब्धस्याभिभवकरणादियं गंगा दरिद्रदैन्यहर्त्री । दुर्वासनामयं हृदयं येषां तेषामपि दुरितहर्त्रीत्यनेन ज्ञातपापानामपि सहजप्रायश्चित्तकारिणी क्षमाकर्त्री बालकज्ञातापराधक्षंत्री मातेव । द्रुतमित्यनेनात्युत्कटत्वं दर्शितम् । तथापि न दृढीकरणाभ्यासापेक्षा वस्तुतंत्रत्वादिति "प्रवाहस्ते वारां सकृदपि गतो दृष्टिसरणिमि"त्यनेन सूचितम् । नन्वेतस्योपासनाकांडत्वसंभवात् श्रद्धाजाड्यत्वमिति चेन्नेत्याह । अपि द्रागाविद्याद्रुमदलनदीक्षागुरुरिहेति । उल्हासेनाऽहं ब्रह्मास्मीति स्फूर्तिजनकत्वात् । सिद्धमतः श्रीमद्गंगामात्रमृतस्य जलरूपेण वस्तुतंत्रमैश्वर्यम् । सकलवसुधाया इत्यनेन पूर्वोक्तत्वाज्जलस्य च प्रत्यक्षत्वात् समृद्धमिति वचनेन नित्यत्वाच्च गंगागमनपक्षः प्रतिषिद्धः । अग्रे तु निष्कलंकैर्महात्मभिर्मातुस्तनपानाय महात्म्यमाश्रणीयम् ।

हरिःॐ तत्सत् श्रीमात्रमृतपाने युक्त्या पूर्वपक्षनिराकरणं नाम तृतीयः कवलः

---

श्री ज्ञानेश्वरमाऊलीसमर्थ

# आगमदीपिका

श्रीमज्ज्ञानेश्वराचार्यं सद्गुरुं करुणार्णवम्
प्रणम्य वक्ष्ये बालानां हितायागमदीपिकाम् ॥१॥

आस्तिका अपि काणादा दृष्टानुमितिजीविनः
शाब्दं मानं न मन्यंते तन्न सत्यं कथंचन ॥२॥

ईशे किमनुमानं स्यात्सर्वज्ञत्वादिषु स्फुटम्
न सर्वत्वे भवेन्मानं कदाचित् शासनं विना ॥३॥

शासनं तु परैर्दत्तं जीवानां बालवत्पुरा
संबंधस्तेन संज्ञातो ।विश्वस्मिन् मानमेययोः ॥४॥

दृष्टस्यापि पदार्थस्य शक्तिः शाब्दं विना नहि
अशाब्दानां पदार्थानां व्यवहारो न विद्यते ॥५॥

संज्ञावृत्तिर्दुर्निवार्या तथा तद्व्याकृतिर्ह्यपि
अकारोकारयोः संधिरोकारो ह्येव जायते ॥६॥

दृष्टं वाऽप्यनुमानं वा भवेन्मानं यथा तथा
शाब्दमेव सदा मानमीशाद्यर्थेषु निश्चितम् ॥७॥

आप्तोपदेशशब्दः स्याद्यदि सोऽनुमितौ स्थितः
तदा जीवो हि सर्वज्ञो ह्याप्तज्ञानं यतो भवेत् ॥८॥

आप्तो यथार्थवक्ता स्याद्यथार्थं चाप्तभाषितम्
इत्यन्योन्याश्रयो दोषो दुर्निवार्योऽनुमानके ॥९॥

—

उपदेष्टा समर्थानां बालानां दृश्यते यतः
तथा परेशो जीवानां तस्मादाप्तो महेश्वरः ॥१०॥

एतदप्यनुमानं चेदुपदेशाद्धि संभवेत्
अन्यथा किंन्न जीवानामीशे नास्तिककल्पना ॥११॥

ईश्वरस्त्वेक एवास्ते ह्यनेकः सर्वविन्न वा
इत्यादि संशयानां तु नानुमित्या निराकृतिः ॥१२॥

आप्तस्य संशये नैव आप्ते सार्थत्वहेतुता
न पदे पदता तेन तस्माच्छब्दो न चानुमा ॥१३॥

पृथक् शाब्दी प्रमा तेन न ह्यास्ते वचने भयम्
भयंचेत्सर्वमानेषु यथादृष्टि यथामति ॥१४॥

प्रतारयंति दृष्टेन यथाऽज्ञंत्वैंद्रजालिकाः
वंचयंति तथा मूढं ह्यनुमानेन नास्तिकाः ॥१५॥

शाब्देऽपि वंचयंत्येवं चेददृष्टस्य योगतः
वंचयंतु ह्यनाप्तास्ते वेदा नैव प्रवंचकाः ॥१६॥

प्रतारयंति सर्वेऽपि मूर्खमन्यप्रतारकम्
तथापि दैवयोगेन गतिस्तद्धर्मतो भवेत् ॥१७॥

तस्माद्वंचनभीत्यैव शाब्दं मानं न नश्यति
न ह्यजीर्णभयात्सर्वैस्त्यक्तुं शक्यं स्वभोजनम् ॥१८॥

अजीर्णे नियतं नो चेद्वचनं नियतं न हि
तस्माच्छाब्दं भवेन्मानमीशसिद्धिकरं शुभम् ॥१९॥

तदस्माकं भवेद्वेदो पुराणं च तथैव हि
वेदार्थस्तु द्विधा प्रोक्तः प्रधानो गौण एव च ॥२०॥

अनुवादप्रकरणाद्दृष्टार्थो गौण एव हि
अज्ञातज्ञापकत्वेन मुख्यो ब्रह्मोपपादकः ॥२१॥

अनुवादं भवेद्येन वेदवाक्यं यथा यथा
स गौणार्थो येन शास्त्रं वेदवाक्यं स मुख्यभाक् ॥२२॥

अनुवादं सृष्टिवाक्यमित्याह मधुसूदनः
उक्तवान् शंकरानंदो वेदः स्वर्गं न बोधयेत् ॥२३॥

श्रुतीनामपि सर्वासामर्थो नारायणः प्रभुः
मंत्रभागवते स्वीये त्वेवं प्राह चतुर्धरः ॥२४॥

श्रीमद्भागवते वेदो वर्णितो ब्रह्मबोधकः
तथाप्यहं स्वबुध्द्यैव किंचिद्वक्ष्ये स्वशुद्धये ॥२५॥

नन्वेवं त्वंपदप्रतिपादकानामाकाशादिप्रतिपादकानां तथा कर्मतद्गति-पुनर्जन्मादिप्रतिपादकानां श्रुतीनां का गतिः। समन्वयस्तु ब्रह्मसूत्रेऽपि संपादितः। तस्माद्व्यर्थोऽयं प्रयत्न इतिचेदस्त्वेवम्। किंत्वारंभणन्यायेन कार्यवर्णनं हि कारणवर्णनं स्यात्। तत्रापि न लक्षणा। शक्तिग्रहणेन हि शास्त्रत्वलाभात्। अन्यथा शक्तिवृत्तेरनुवादत्वापत्तेः। बहुकर्मवाक्यानां विकल्पेन व्यवस्था। तत्र न समन्वयो भाव्यः। उपासनावाक्यानां तु समन्वयो ध्येयलिंगवाक्यसमन्वयाद्ब्रह्मसूत्रे संपादितः। ज्ञेयलिंगवाक्याना-मप्येवं समन्वयः संपादितस्तत्र। तेन भूतश्रुतीनामविगानप्रकरणे विगानांगी-कारेऽपि तत्कारणे तच्छक्तिग्रहणादविगानप्रपत्तिं भाष्यकारा जगुः। परं चाज्ञेयानां भूतकर्मगतिवाक्यानामन्यहेतुपरत्वेन ज्ञेयत्वे जघन्यत्वाद्वाक्ये शास्त्रत्वनिर्धारणायान्यत्र प्राधान्यमवगंतव्यम्। भूतवाक्यानां "समाधास्यंति चाचार्या इति" मध्यमाधिकारिविषयत्वेन भाष्यकृदुक्तेः। "स एकधा भवति त्रिधा भवतीति" उपासकगतिवाक्यस्य भगवदवतारपरत्वेन पुन-र्भाष्यकृदुक्तेश्च। यदपि कर्मतद्गतिप्रतिपादकानां "स्वर्गकामो यजेतेत्यादिवाक्या-

नामज्ञातार्थज्ञापकत्वं प्रसिद्धं तथाप्यमुख्यार्थत्वान्न श्रुतीनां तथा प्रवृत्तिः । अथवा कयाचिद्वृत्त्या भगवदालंबनमुचितामिति देहाद्भिन्नस्यात्मनो ज्ञानाय चेतसः शुद्धये कर्मतद्गतिवाक्यानां व्यवस्थितिं मन्यंते । अस्त्वेवम् । तत्कस्य हेतोः । अनुक्तेऽपि यथाकथंचित् कर्मगतिसंभवात् । न हि स्वर्गफलशंसनं योग्यम् । श्वानसूकरादिवद्विषयप्रपूरितत्वादकामत्वविधानवैयर्थ्याच्च । विषयसुखलोलुपानां तत्सुखं तद्भावनया मिलतीत्यनुमानसापेक्षत्वेन स्वर्गवाक्यानामनुवादत्वापत्तेः । परमेश्वरस्यैवेति चेन्न । अनुपदिष्टप्रवृत्त्यसंभवेनानुमानाप्रवृत्तेः । अस्तु वा नैषां कर्मतद्गतिज्ञानं तदर्थं यथाकथंचित् वाक्यप्रवृत्तिः । तथापि कस्य कियत्सामर्थ्यमित्यनियतत्वादाकाशफलपातवल्लब्धयोगेन कर्मतद्गतिज्ञानसंभवान्नानुवादता व्यभिचरति । न हि योगमात्रेण जीवेश्वरैक्यं परेश्वरोपासना वा विज्ञायते । जीवेशयोरैक्यस्य ध्यानभिन्नपरत्वात् । एवं योगिनमपि परमेश्वरस्फूर्तिदानादर्शनसंभवे तत्प्रतिपादकवाक्यानामनुवादतेति चेन्न । स्फूर्तिप्रदानस्य श्रुत्युपदेशावष्टंभात् । अनुवादत्वेऽपि तद्भिन्नप्रयोजनाभावान्न दोषः । तस्मात्सर्वासां श्रुतीनां भगवत्परत्वमवश्यं भाव्यम् । सृष्टिश्रुतीनां त्वनुवादपरत्वं प्रसिद्धम् । विगानदर्शनात् । त्वंपदप्रतिपादकानां वाक्यानामन्नमयाद्यर्थग्रहणे चार्वाकादिमतप्रवेशापत्तिः । लक्षणाग्रहणे तत्वमसिवाक्यसार्थकत्वेऽप्यन्नमयादिवाक्यानामनुवादत्वेनाशास्त्रत्वम् । तस्मादनुवादवाक्यानामपि भगवद्विषये विधिपरत्वं भाव्यम् । तत्र चादौ कर्मश्रुतीनां न हि समन्वयापेक्षा । विकल्पेन व्यवस्थासंभवात् । किंतु तासां रूपकेन भगवत्येव समन्वयः । तथा चोपासनायां वदंति तातपादाः "तरी ज्ञानयज्ञ तो एवंरूप । जेथ आदिसंकल्प हा यूप । महाभूते मंडप । भेद तो पशु ॥३९॥ मग पांचाचे जे विशेष गुण । अथवा इंद्रिये आणि प्राण । हेचि यज्ञोपचारभरण । अज्ञान घृत ॥४०॥ तेथ मनबुध्दीचिया कुंडा । अंति ज्ञानाग्नि धडफुडा । साम्यतेची सुहाडा । वेदिका जाणे ॥४१॥ साविवेकमति-

पाटव। तेचि मंत्रविद्यागौरव। शांति स्रुक् स्रुव। जीव यज्वा। तो प्रतीतीचेनी पात्रे। विवेकमहामंत्रे। ज्ञानाग्निहोत्रे। भेदनाशी ॥४३॥ (ज्ञानेश्वरी अ. ९)” एवं सर्वेषां यज्ञानां हिंसापराणामप्ययमाशयः। यत्र यस्याभिमानस्तत्तद्दर्पणेन तस्य तस्य गतिरिति पशुयज्ञानामाशयं भावयंति। मंथप्रक्रियानामश्लीलवाक्यानां च तत्तद्योनौ तत्तद्रूपेण भगवदवताररासोपासनाभावप्रवृत्तिः। गोवृषभरूपधर-पृथिवीप्रजापत्यादिवत्। अन्यथाऽत्यंतजुगुप्सितानुवादपरत्वेऽपि वाममार्ग-प्रवेशापत्तिः। एवं कालसंपादकश्रुतिनामपि भगवदवतारपरत्वमेवावगंतव्यम्। अन्यथा कल्पविकृतिपुराणवाक्यब्राह्मणवाक्यविरोध आपद्येत। एवं पुनर्जन्म-श्रुतीनामपि भगवदवतारपरत्वमात्रम्। इतरथा पूर्वदेहवत्पररूपं गृण्हातीति बृहदारण्यकश्रुतितद्भाष्ययोः कादाचित्ककल्पनया “धाता यथापूर्वमकल्पयदि”-त्यादिश्रुतीनामपि कादाचित्ककल्पना दुर्निवारा स्यात्। पापपुण्यभोगशास्त्रं तदविरोधि भाष्यं तथा पुनर्जन्मश्रुतिश्च कादाचित्ककल्पनायां मानमिति चेन्न। पापपुण्यभोगशास्त्रापेक्षया समजन्मश्रुतितुल्यत्वेन मुख्यत्वसामान्यात्। दृष्टसुखदुःखत्वेन पापपुण्यभोगशास्त्रस्य न्यायानुगृहीतत्वादिति चेत्तीव्रसंवेग-भावनाफलत्वेन समजन्मश्रुतीनामपि न्यायानुगृहीतत्वं समानम्। तस्मात्पापपुण्य-भोगशास्त्रस्य यथाकथंचित् वैराग्यहेतोः पुनर्जन्मप्रतिपादकत्वे समजन्मश्रुतीनां भगवदवतारपरत्वं सिद्धम्। पापपुण्यभोगशास्त्रस्यापि तल्लीलामात्रेण तत्परत्व-मिति चेन्न विरुध्यते तदेकमात्रपर्यवसायित्वात्।

अथ खलु सृष्टिश्रुतीनां समन्वय उच्यते। द्विविधा हि सृष्टिश्रुतयः। कार्यगानरूपाः कारणगानरूपाश्च। तत्र चाद्याः “अग्निर्हिमस्यभेषज-मि”त्याद्याः। द्वितीयास्तस्मादाकाशः संभूत इत्यादाः। तत्र चाद्यानां कथं परमेश्वरोच्चारणं घटते बुद्धिपूर्वकमबुद्धिपूर्वकं वा। आद्ये उन्मत्तः परमेश्वरः स्यात् यदेवंविधं लोकज्ञानसिद्धमपि वाक्यमीरयति।

अंत्ये मूर्खः स्यात्। य एवंविधं वाक्यमुच्चरन्नपि न तत्र वशी (वशो) भवति। अनिष्टमेतद्वेदवादिनाम्। तस्मादग्निर्हिमस्य भेषजमित्येतच्छास्त्रमेव नानुवादः। कथमेतदुच्यते। अग्नौ हिमस्य भेषजत्वमिति भगवत्संकल्पः न स्वयमग्निर्हिमस्य भेषजमिति तदर्थः। उक्तं च केनोपनिषादि यक्षनिकटेऽग्निस्तृणमपि दग्धुं न शशाकेति। तेन सर्वेषां पदार्थानां या शक्तिः सा भगवच्छक्तिरित्युपलक्षणं कृतम्। एवमाकाशादिश्रुतीनामपि न ह्याकाशादि-परत्वम्। जडानां परस्परकार्यकारणभावानिराकरणेन तत्तदुपहितचेतनस्य तत्तद्गुणवृत्त्या तदेकमात्रपरत्वेनोपास्यत्वात्तदनन्यत्वमारंभणन्यायेनोपादान-बोधकत्वात्। तत्र चाकाशगुणवृत्त्या व्यापकत्वमलिप्तत्वं साध्यं भगवतः। वायोर्गुणवृत्त्या प्राणनम्। तेजोगुणवृत्त्या प्रकाशनम्। जलगुणवृत्त्या प्रीणनम्। महीगुणवृत्त्या धारणम्। अयं भावः। धारणप्रीणनप्रकाशनपोषणादीनां न पृथिव्यादिषु सामर्थ्यमास्ति। तदाधिक्ये तु विकृतिदर्शनात्। स्वप्नवद्युग-पदुत्पत्तेश्च। तदुक्तं प्रियचरणैः।

यदादित्यगतं तेजो जगद्भासयतेऽखिलम्।
यच्चंद्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्॥
गामाविश्य च भूतानि धारयाम्यहमोजसा।
पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः।
अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्॥

"इत्यादि एवं व्यष्टित्वंपदोपाधिवर्णनं श्रुतीनामाधिदैविकसमष्ट्युपाधौ लयचिंतनेन मांडूक्यगतपादमात्रादिचिंतनवदुपास्यभगवत्परत्वम्। तत्र च देहेंद्रियश्रुतीनां वैश्वानरेश्वरपरत्वम्। वैश्वानरवाक्यानामीश्वरत्वं च शारीरभाष्ये निर्णीतमस्ति। एवं प्राणमनबुध्दयादिश्रुतीनां हिरण्यगर्भपरत्वम्। हिरण्य-गर्भस्यापि जीवत्वात्प्रतिकल्पभेदेनाप्युपास्यत्वाभावात् हिरण्यश्मश्रुहिरण्य-

केशादिरूपपरब्रह्मोपासनमेवोक्तम् । "अतस्तद्धर्मोपदेशादिति" न्यायात् । तदुपासकगतिश्रुतीनामपि भगवद्व्यूहपरत्वेनाचार्येण निर्णीतमस्ति । एवं कार्य-श्रुतीनां भगवत्परत्वं निर्धारितम् । शिवविष्ण्वादिश्रुतीनां तु विगानाभावात् कारणब्रह्मपरत्वं पुरैव निर्धारितं स्यात् । द्वैतिनां विशिष्टाद्वैतिनां च यद्यपि मुक्तौ विवादस्तथापि श्रुतिवाक्यानां परमेश्वरपरत्वे न विवादः किंचिदपि । वेदस्तुतौ स्वामिभिरपि वेदस्य भगवत्परत्वमुक्तम् । षड्लिंगमात्रेण सर्व-श्रुतिसमन्वये सत्वे व्यर्थोऽयं यत्न इति चेन्न । स्वबुद्ध्यनुसारेण सर्वैराचार्यैरुप-क्रमादिषड्विधलिंगैरेव स्वाभिमतार्थानयनान्नैवं परमेश्वरनिर्धारविषये संभवेत् । बुद्धेरपि तदेकपर्यवसायित्वात् । त्यक्तपरमेश्वरबुद्धीनां पूर्वमीमांसायामनुवादरू-पत्वान्नास्तिकतंत्रे प्रमाणशून्यत्वाच्च सर्वागमानां भगवत्परत्वं सिद्धम् ।

एवमेव हि वेदेषु सम्यङ् निर्धारितेषु च
तदुपबृंहणन्यायपुराणानां तथागतिः ॥ २६ ॥
भिन्नानां चेतिहासानां कल्पभेदात्समन्वयः
एककल्पविरुद्धानां कायव्यूहात्समन्वयः ॥ २७ ॥
तीव्राणामीशनिष्ठानां कोऽपि मार्गः फलप्रदः
महान्निंदितकृत्यानां ब्रह्मनिष्ठान्यवर्जने ॥ २८ ॥
तथा चागमसत्यत्वमिति सम्यक्समन्वयः
श्रीज्ञानेश्वरकृपालेशात् समाप्तागमदीपिका ॥ २९ ॥



श्री ज्ञानेश्वरमाऊलीसमर्थ

शब्दे उपपत्तिर्द्वेधोपलभ्यते । जडजः शब्दश्चेतनजः शब्द इति भेदात् । तत्र मीमांसकाः वैय्याकरणाश्च शब्दं जडजं प्राहुः । शब्दश्चेतनजश्चेत्यपरे । तत्र जैनादय आत्मजं शब्दं प्राहुः । नैय्यायिकास्त्वीश्वरजम् । अथवाऽन्या त्रेधा शब्दोपपत्तिः । स्वयंभूः शब्दः । पौरुषेयः शब्दः । अपौरुषेयः शब्दश्चेति । तत्र स्वयंभूः शब्द इति मीमांसकाः प्राहुः । आर्हताद्याः पौरुषेय इत्याहुः । वेदान्तिनस्त्वपौरुषेय ईश्वरजन्य इत्याहु । पुनस्तस्य नित्यानित्यत्वेऽपि विवादः । शब्दो नित्य इति मीमांसकाः । अनित्य इति नैय्यायिकाः । त्रिक्षणावस्थायित्वमनित्यत्वम् ।

न्यायमते तु शब्दस्य ये स्युरुत्पत्तिहेतवः
पूर्वमीमांसकैस्तेऽभिव्यक्तिहेतव ईरिताः ॥१॥
वेदो यावज्जगत्स्थायीत्येवं वेदान्तसंमतिः
एवं तदर्थसंबंधे मतं स्याद्बहुधा पुनः ॥२॥
स्फोटाद्वर्णाद्धरीच्छातश्चेति बोधोऽस्ति वादिनाम्
अन्यद्दिङ्मात्रमालोच्य वेदान्तमतमुच्यते ॥३॥
यदि नित्यो भवेच्छब्दो ततोऽभिव्यक्तता कथम्
कुतो लैन्यं भवेत्तस्य कस्य हेतोर्न भासते ॥४॥
संस्कारमात्रः शब्दश्चेदाकाशे प्रकृतावुत
आद्ये गुणो भवेच्छब्दो द्रव्यत्वं न च संभवेत् ॥५॥
मीमांसकैस्तु द्रव्यत्वं शब्दस्योक्तं सदैव हि
अन्त्ये का प्रकृतिस्त्वेषा जैवी वा पारमेश्वरी ॥६॥
आद्ये जैनतुल्यताऽन्ते न्यायवेदान्ततुल्यता
समीचीनं न मे भाति जैमिनीयं मतं त्वतः ॥७॥
त्रिक्षणावस्थायिता चेत्कथमाध्यापकस्मृतिः

स्मृतिर्नस्याद्वक्तुरिच्छाऽशुचावपि निदर्शनात् ॥८॥
वर्णसंस्कारनित्यत्वे मानसी शब्दनित्यता
कथमनित्ये शब्दे वा नित्यशब्दत्वसंस्थितिः ॥९॥
घटे घटत्ववच्चेन्नश्चैककालिकवर्जनात्
अथवा नित्यजातेः स्यादनित्याधिकृति (अधिकरणम्) यदि ॥१०॥
व्यापकः स्यात्तदा तस्याः कथं संधौ स्थितिर्भवेत्
तस्माज्जातिः स्वतो मिथ्या तेन शब्दत्वमेव चेत् ॥११॥
भवत्वेवं तदा यावज्जगच्छब्दत्वमेव हि
तावद्वेदोऽपि संस्थाता शिवजन्यः शिवंकरः ॥१२॥
आनुपूर्वेरनादित्वात्पौरुषेयो न चोच्यते
ईश्वरस्थोद्भावितत्वान्न नित्योऽपि भवेत्पुनः ॥१३॥
अनित्ये मंत्रशक्तेस्तु हानेरपि च संभवः
ईश्वरोक्तात्रिक्षणांते नाशे शब्दे पुनः कथम् ॥१४॥
उत्पत्तिरपि वर्णानां स्यात्तथा मंत्रशक्तिदा
आर्षवर्णविनाशे तु मंत्रशक्तिः पुनः कथम् ॥१५॥
असदादिसमुक्तानां वर्णानामपि संभवेत्
आनुपूर्वी मंत्रहेतुरिति चेद्धा हतोऽसि रे ॥१६॥
आनुपूर्वेः कारणं किं वक्तुरिच्छाऽथवा स्मृतिः
आद्ये स्पष्टस्तवोन्मादः कृतशंकाविरोधतः ॥१७॥
अन्त्ये संस्कारजन्यत्वमभ्युपेयं त्वयाऽपि हि
संस्कारस्त्वण्ववस्थातो न कश्चिदतिरिच्यते ॥१८॥
तस्माच्छब्दस्य नित्यत्वं त्वद्गले पतितं किल
आकाशवृत्तिश्चेच्छब्दो हार्दाकाशे मनः स्थितिः
मानसे भावनाख्यः स्यात्संस्कारः शब्दसंस्कृतिः ॥१९॥

कथं वा नित्यत्वविभुत्वादिविशिष्टस्याकाशस्य समवायसंबंधेन गुणानित्यत्ववर्तनम्। आकाशेशब्दस्तिष्ठति चोत्पद्यते च। प्रथमप्रसक्तौ सांख्यवेदान्तादिसमापत्तिः। द्वितीये आकाशशब्दयोः संबंधाभावः। तस्मान्नात्र शक्तिस्मृत्यादिहेतुत्वाच्छब्दस्य त्रिक्षणावस्थायित्वम्। तद्विरहाच्च यावज्जगत् स्थितिः सिद्धा वेदस्य। अर्थसंबंधविचारः पूर्वमुपपादितः। उपपादयिष्ये चाग्रे।

---

## श्री ज्ञानेश्वरमाऊलीसमर्थ

एवं शब्दे निर्धारिते तद्वृत्तिग्रहणप्रक्रियाऽधुना निर्धार्यते। शब्देऽर्थज्ञानसामर्थ्यं शक्तिः। सा परमेश्वरेच्छारूपैवेति नैय्यायिकाः। औत्पत्तिकसंबंधरूपेति मीमांसकाः। स्फोटरूपेति सांख्ययोगवैय्याकरणाः। वर्णमात्राकृतिसंबंधस्वरूपेति वेदान्तिनः। अत्रैतेषां शास्त्राणां मध्ये परस्परविवादः पंडिताज्ञानात्। तत्र प्रथमं नैय्यायिकं प्रत्यन्ये विवदंति। सर्वेषां शब्दानां परमेश्वरेच्छारूपशक्तित्वे साध्वसाधुशब्दविभागानुपपत्तिः। न च व्याकरणादिना तद्ग्रहणमिति वाच्यम्। एकाक्षरीकोशे सर्ववर्णेषु भगवदिच्छासंभवात्साध्वसाधुविभागानुपपत्तिः। "तत एकः शब्दः सम्यक् ज्ञातः सम्यक् प्रयुक्तश्च स्वर्गे लोके कामधुग्भवती"त्यादि भाष्यविरोधः स्यात्। नैवमंत्यवर्णसंबंधमते स्फोटमते वा। विनष्टवर्णानां संस्कारोपयोगिताभावात्। एवं मीमांसकं नैय्यायिकं प्रति च सांख्ययोगवैय्याकरणाः विवदंति। अथ कोऽयं शब्दः। एकवर्णोऽनेकवर्णो वा। कथं वार्थबोधः। व्याष्टिसंश्रयात् समष्टिसंश्रयाद्वा। नाद्यः।

एकवर्णात्मके पदे औत्पत्तिककार्यसंबंधत्वेनानेकवर्णात्मके पदे कस्यचिद्वर्णस्य नैरर्थक्यमवश्यं भावित्वाद्वर्णा एव शब्दा इत्युपवर्षमतविरोधेन स्वप्रतिज्ञाहानिः। विनष्टवर्णानां संस्कारानुपयोगित्वादंत्यवर्णस्यार्थबोधकत्वमितिचेन्न। तथात्वे "अग्निमीळे" इत्यादिवाक्येषु ळेकारमात्रोच्चारणेव सूक्तपठणजन्यादृष्टसमापत्तिः। तस्मात् स्फोटसंज्ञकं नित्यं पदमेकमेव स्वाविवर्तभूतं व्यस्तवर्णैः समस्तवर्णैर्वाऽभिव्यज्यते। अत एवार्धमात्रालाघवं पुत्रोत्सवं मन्यामहे। वेदान्तिनस्तु पुनः प्राहुः। मैवं साध्विति। विनष्टगकारस्योत्पन्नगकारेण सह सादृश्यसाधनप्रमाणभावात् तारत्वमंदत्वादिध्वनिभिन्ना वर्णा एव शब्दा आकृतिमात्रं बोधयंति न व्यक्तिमात्रम्। ततः स्फोटकल्पनायामेव गौरवम्। एवं मतवैचित्र्ये प्राप्ते निर्णयं ब्रूमः। परं चादौ कृतप्रमादोऽयं ज्ञात्वापि क्षंतव्यो वेदान्तिभिः। किमयं शब्दविचारो लौकिकशब्दविषये प्रवर्तते आहोस्विद्वैदिकशब्दाविषये। लौकिकेषु शब्देषु लोकेच्छाविषयतः साध्वसाधुविभागोपलंभान्न म्लेच्छितव्यं नापभाषितव्यमित्यादि श्रुत्युपपत्तिः। शब्दार्थयोर्नित्यसंबंधमते लौकिकानामपि शब्दानां तद्भाव्यत्वाद्वेदवत् सर्ववाक्यप्रामाण्यापत्तिः। वेदान्तमतेऽपि दोषोऽयं दुर्निवारः। नवीनास्तु ( नव्यास्तु ) लौकिकपदेषु परमेश्वरेच्छारूपां शक्तिं न मन्यंते। तस्माद्वैदिकशब्दाविषये एव सफलेऽयं विचारप्रवृत्तिः। तत्र च पूर्वमीमांसकवेदान्तसांख्ययोगव्याकरणादिषु विनातं प्रमाजनकत्वप्रसक्तिः। भवत्वेवं वेदान्ताभिन्नमतेषु। परं च वेदान्तेऽप्येवम्। तदा हंत चेतनकारणवादप्रतिज्ञाहानिः। ईक्षणाच्चेतनकारणवादसिद्धौ शब्दोत्पत्तावनीक्षणसिद्ध्युक्तिविरोधात्। प्राचीनाः खलु परमेश्वरेच्छारूपां वैदिकशब्देषु शक्तिं मन्यंते। तामेव परंपरया ऋषयो संगृण्हंति। वेदशब्दस्मृतिपूर्वकजगदुत्पत्तिश्रुतिस्तु प्रजापतिसर्गं द्योतयाति नैश्वरं सर्गम्। अस्त्वेवं प्राञ्चां विवादः। मम तु बालचेष्टितं सर्वं स्वतंत्रम्। परमेश्वरो निमित्तोपादानकारणं नामरूपस्वरूपेण शब्दार्थस्वरूपेणच विलसति। कार्यसर्गे नामरूपपार्थक्यदर्शनेऽपि कारणे तदैक्यात्। कार्येऽपि कारणस्योपाहितत्वात्। शब्दानां

परमेश्वरः सहजोऽर्थः। लौकिका अर्थास्तु तैस्तैः प्रकल्पिताः। ततो वैदिकशब्दानां मुख्यतया परमेश्वरपरत्वेऽपि कामात्मानो यज्ञार्थत्वेन संगिरंते ऋषयः परमेश्वराज्ञया। एवं निष्कामा लौकिकशब्दार्थमपि परमेश्वरं मत्वा भवार्णवं निस्तरंति। तथापि रूढिबुद्धया परमेश्वरवाचकाः शब्दाः वैदिकाः पौराणिकाश्च विनापि श्रद्धया भवार्णवादुद्धरंतीति शम्।

## श्री ज्ञानेश्वरमाऊलीसमर्थ

ननु सर्वेषामागमानां परमेश्वरनिष्ठेति प्रतिपादितं तदसत्। परमेश्वरस्यैवासत्वात्। तत्र परमेश्वरे विप्रतिपत्तयः। परलोकस्यासद्भावात्सर्वविनाशित्वाच्चेत्येका। क्षणिकत्वाच्छून्यत्वाच्चेत्यपरा। कर्मणः फलसाधकत्वादर्हन्सिद्धयोर्नित्यत्वात्साम्यनंतत्वाच्चेत्यन्या। नापीश्वरे प्रमाणप्रवृत्तिस्तदसद्भावात्। विवादगोचरत्वान्न प्रत्यक्षं प्रवर्तते। नाप्यनुमानं प्रवर्तते हेत्वसिद्धेः। नाप्यागमः। शशशृंगादिवदविषयविषये प्रवृत्तस्य तस्याप्रामाण्यात्। इति प्राप्ते ब्रूमः। कथमीश्वरस्यासत्वं साध्यते ऽभावरूपमन्यद्रूपं वा। आद्ये कथं प्रतियोगिनिष्ठातो वाऽधिकरणनिष्ठातो वा गम्यते। नाद्यः। प्रतियोगिज्ञानस्य पूर्वप्रमाणावच्छेदकसंबंधेनाधिगतत्वात्। नापि द्वितीयः। सर्वाधिकरणस्यैकसमयावच्छेदेन गोचरत्वाभावात्। पुनश्च प्रागभावरूपं परमेश्वरासत्वं प्रध्वंसाभावरूपमन्योन्याभावरूपमत्यंताभावरूपं वा। नाद्यः। तद्रूपस्य तस्यानादिनिष्ठतया तन्निमित्ताभावेन नाशाभावात्तदुत्पत्तौ वा नाशसंभवादुभयथापि विप्रतिपत्तिः। नापि द्वितीयः। सत्वस्यानादिनिष्ठतया तस्य सर्वशक्तीत्यादिग्रहणेन तन्नाशकनिमित्ताभावेन ध्वंसासंभवे तदधिकरणानुलंभाच्च ध्वंसासंभवः। नापि तृतीयः। तद्भेदासिद्धौ तत्सत्वहान्यभावेन वादिनः प्रतिज्ञाहानेः। नापि चतुर्थः। बहुविवक्षासार्थकासमासपदवाच्यत्वात्।

एवं सामान्यतः सिद्धौ पक्षाधिक्षेपतः पुनः
परमेश्वरवैशेष्यं सम्यक् निर्णीयते मया ॥

यदात्मनो नित्यत्वाभावात्तत्प्रकारके परमेश्वरे कुतोऽस्तित्वसबधं इति चार्वाकप्रलपनम् । तन्न युक्तम् । उत्पन्नः पुरुषः पूर्वजन्मसंबंधरहितोऽस्तीत्यत्र दृष्टमात्रांगीकर्तुस्तवानुमानं विना प्रवृत्त्यभावात् । तथा चैतदनुमानं त्वया साध्यम् । अयमुत्पन्नो देवदत्तः पूर्वं नासीत् यन्नैवं यथा यज्ञदत्तः ; एवमुत्पन्नः पुरुषो न पूर्वात्मा विनष्टत्वाद्यज्ञदत्तादिवदिति । तत्प्रत्यक्षविरुद्धत्वात् स्मृतिलिंगेन भूतकालानुमानतो यथापूर्वापरलिंगेन भविष्यकालानुमानतश्च प्रत्यक्षस्य कालत्रयावच्छेदाभावादात्मनाशस्य कालत्रयावच्छिन्नत्वम्साध्यम् । अथवा येनानुमानेनात्मनाशस्य कालत्रयावच्छिन्नत्वं साध्यते तेनैवानुमानेनात्मनः सत्वमपि कालत्रयावच्छिन्नं साध्यते । निरूपाधिकाभावत उत्पन्नत्वात् । यद्यन्निरुपाधिकाभावत उत्पन्नं तत्तदेव कारणैकत्वात् ध्वंसाभावाच्चाविर्भूतपदार्थवत् । एवमात्मनित्यत्वे साधिते तत्प्रकारः परमेश्वरोऽपि सिद्ध एव ।

इति चार्वाकविप्रतिपत्तिपरिहारः

# षड्दर्शनलेशसंग्रहः

श्री ज्ञानेश्वरमाउलीसमर्थ
ज्ञानदेवं गुरुं नत्वा जननीं बोधवृद्धये
षण्णामपि दर्शनानां कुर्वेऽहं लेशसंग्रहम् ॥१॥

सर्वेभ्यः श्रेष्ठे मानुषे जन्मनि खल्वयं विचारः प्रवर्तते—

"कोऽहं कथमिदं जातं को वा कर्तास्य विद्यते
उपादानं किमस्तीह विचारः सोऽयमीदृशः"

कोऽहमिति। अहं कः को जीव इत्यर्थः। जीवस्याहंप्रत्ययलक्षणत्वात्सामान्यं ज्ञानं सिद्धम्। विशेषज्ञाने जिज्ञासा। कथमिदं जातम्। इदं जगत्कथमुत्पन्नमित्यर्थः। को वास्य कर्ता विद्यते। जगतः कर्ता ईश्वरः क इत्यर्थः। इहास्मिन् किमुपादानम्। किमोतप्रोतकारणमित्यर्थः। अनेन खलु को जीवः, क ईश्वरः, कथं सृष्टेरुत्पत्तिस्थितिलयाः भवंति, कथं जीवो नानायोनिषु संसरति, कथं चासौ विमुच्यत इति जिज्ञासोपपद्यते। कौ जीवेश्वरौ, कौ बंधमोक्षाविति द्वंद्वद्वयजिज्ञासैवोपपद्यते। एवं लाघववचनम्। इति जीवचिंतापनोदनार्थमेव षड्दर्शनप्रवृत्तिः। दर्शनानि षट्। न्यायदर्शनम्। वैशेषिकदर्शनम्। सांख्यदर्शनम्। योगदर्शनम्। पूर्वमीमांसादर्शनम्। वेदान्तदर्शनमिति। के तेषां कर्तारः। उच्यते। न्यायस्य कर्ता गौतमः। कणादो वैशेषिकदर्शनस्य कर्ता। सांख्यप्रवक्ता कपिलः। योगस्य वक्ता पतंजलिः। पूर्वमीमांसाया जैमिनी प्रणेता। वेदान्तदर्शनकर्ता भगवान् बादरायणः। एतेषु दर्शनेषु प्रमाणप्रमेयपरिग्रहास्त्रय एव पदार्था इति वा संक्षेप उक्तः। ज्ञानसाधनं प्रमाणम्। ज्ञेयं प्रमेयम्। विशेषावधारणं परिग्रहः। प्रत्यक्षानुमानशब्दादीनि प्रमाणानि। जगत् जगत्कारणमीश्वरो जीवो बंधहेतुर्बंधो मोक्ष इति प्रमेयाणि। तत्र

नैय्यायिकाश्चत्वारि प्रमाणान्याहुः । तथा च गौतमीयं "प्रत्यक्षानुमानोपमानशब्दा प्रमाणानि । इंद्रियविषयसामिप्यजन्यं ज्ञानं प्रत्यक्षम् । यथाऽयं घटः कंकणमिदम् । प्रत्यक्षपूर्वकमनुमानम् । तत्त्रिविधम् । कारणलिंगकं कार्यलिंगकं सामान्यदृष्टं चेति भेदात् । घनच्छन्नमाकाशं दृष्ट्वा वृष्टिर्भविष्यतीति कारणलिंगकम् । पूरं दृष्ट्वा नदीमूले वृष्टिरभवदिति कार्यलिंगकं । शांता त्वद्गृहादिहागता तेन सा गतिमतीति ज्ञायते । गतिं विना गंतुमशक्यत्वादिति सामान्यदृष्टम् । सादृश्यज्ञानमुपमानम् । यथा पोळिकासदृशा रोटिका गोसदृशो गवयः । आप्तोपदेशः शब्दः । हितकर्तृत्वे सति यथार्थवक्ता आप्तः । केवलो हितैषी वा । आप्तो द्विविधः । ईश्वरो जीवश्च । ईश्वरोक्तः शब्दो वेदः, जीवोक्तः शब्दः स्मृत्यादिः । ईश्वरस्य निर्दोषत्वात् वेदस्य स्वतःप्रामाण्यम् । जीवे दोषसंभवात् तदुक्तस्मृत्यादेर्वेदमूलेन प्रामाण्यम् । वैशेषिकशास्त्रे प्रमाणे द्वे । प्रत्यक्षमनुमानं चेति । लक्षणं पूर्ववत् । सांख्यशास्त्रे त्रीणि प्रमाणानि । प्रत्यक्षमनुमानं शब्दश्चेति । लक्षणं पूर्ववत् । योगशास्त्रे प्रमाणानि सांख्यवत् । तथा च योगसूत्रम् "प्रत्यक्षानुमानागमाः प्रमाणानि । पूर्वमीमांसायां प्रमाणानि षट् । प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धिभेदात् । प्रत्यक्षादिचतुष्टयमुक्तम् । संपाद्यसंपादककल्पनमर्थापत्तिः । यथा देवदत्तो दिवा न भुंक्ते पीनो दृश्यते तेन रात्राववश्यं भुंक्ते इत्यर्थापत्तिः । सा द्विविधा । दृष्टार्थापत्तिः श्रुतार्थापत्तिश्चेति भेदात् । देवदत्तोदाहरणेनोक्ता दृष्टार्थापत्तिः । श्रुतार्थापत्तिर्यथा । श्रुतिषु जगच्चेतनामित्युक्तम् । तर्हि किं जगत्कारणं । तत्रावश्यमविद्याकल्पनामिति । अभावज्ञानमनुपलब्धिः । यथा भूतले घटो नास्ति । नास्त्यत्र तव माता । वेदान्तेऽपि षट् प्रमाणानि । व्यवहारे भाट्टनयो ह्यस्माकमपि संमतः इत्युक्तेः । इति षट्दर्शनानां प्रमाणनिर्णयः

अथ प्रमेयनिर्णय उच्यते । नैय्यायिकाः पृथिव्यप्तेजोमरुताख्यभूतचतुष्टयपरमाण्वारब्धं घटपटाद्याकृतिविशिष्टं जगदित्याहुः । तस्य चायं क्रमः ।

ईश्वरादृष्टनिमित्तात् द्वाभ्यामणुभ्यां संयोगात् द्व्यणुकोत्पत्तिः । त्रिभिर्द्व्यणुकैस्त्र्यणुकोत्पत्तिः । चतुर्भिस्त्र्यणुकैश्चतुरणुकोत्पत्तिः । एवं महान् वायुर्महानाग्निमहज्जलं महती महीति भूतानामुत्पत्तिः । एवं संयोगक्रमेणोत्पन्नानां विभागक्रमेण परमाणुपर्यंतमपकर्षो लयः । वैशेषिका अपि जगत्स्वरूपमेवमेवाहुः । सांख्याः प्रकृतिपरिणामरूपं त्रयोविंशतितत्वात्मकमित्याहुः । तत्र बुद्ध्यहंकारपंचतन्मात्राणि पंचमहाभूतानि एकादशेंद्रियाणि चेति त्रयोविंशति तत्वानि । निश्चयात्मिका बुद्धिः । अहमस्मीति जाग्रत्स्वप्नयोर्विशेषप्रत्ययोऽहंकारः । शब्दस्पर्शरूपरसगंधाः पंचतन्मात्राणि । श्रोत्रग्राह्यः शब्दः । स द्विविधः । ध्वन्यात्मको वर्णात्मकश्च । ध्वन्यात्मको भेर्यादौ । वर्णात्मकः संस्कृतभाषादिरूपः । त्वगेंद्रियग्राह्यः स्पर्शः । स त्रिविधः । शीतोष्णानुष्णाशीतभेदात् । अंगसंकोचकः शीतः । यथा हिमस्य । अंगप्रसारक उष्णः । यथाग्नेः । उभयविलक्षणोऽनुष्णाशीतः यथा कस्यापि वस्तुनः ।

---

# युक्तितत्वानुशासनम्

## श्री ज्ञानेश्वरमाऊलीसमर्थ

ज्ञानेश्वरं गुरुं नत्वा युक्तितत्वानुशासनम्
सर्वशास्त्रप्रवेशाय प्रवक्ष्यामि यथामति ॥१॥

तत्वं द्विविधम् । नित्यानित्यभेदात् । अविनाशि नित्यम् । नाशवद-नित्यम् । वेदान्तमते ब्रह्माभिन्नं सर्वमनित्यम् । तथापि यावद्व्यवहारं नित्य-मनित्यम् । तत्र तत्र वदिष्यामः । पुनस्तत्वं द्विविधम् ज्ञानज्ञेयभेदात् । ज्ञानं द्विविधम् । साक्षिज्ञानं वृत्तिज्ञानमिति भेदात् । साक्षिज्ञानं वेदान्त-प्रसिद्धम् । यावद्विदेहकैवल्यं नित्यमिति पठ्यते । वृत्तिज्ञानं द्विविधम् । अहं-वृत्तिरिदंवृत्तिरितिभेदात् । अहंवृत्तिः प्रसिद्धा । इयमेव ज्ञाताप्रमाताकर्ता-भोक्तेत्यादिपर्यायपर्यायैर्व्यवह्रियते । सा सर्वेषु दर्शनेषु यावन्मोक्षं नित्या । इदंवृत्तिज्ञानं द्विविधम् । यथार्थमयथार्थं चेति भेदात् । व्यवहारयोग्यं यथा-र्थम् । यथोपयोगसंपादको व्यवहारः । वेदान्ताभिन्नमते उत्पत्तिदशायामनित्यं लीनदशायां संस्काररूपेण च नित्यम् । भासमात्रं ज्ञानमयथार्थम् । तदुपरि-ष्टादुपपादयिष्ये । यथार्थज्ञानं चतुर्विधम् । संस्कारस्मृतिप्रत्यभिज्ञाप्रमाभेदात् । मनसि ज्ञानस्य लीनभावः संस्कारः । स द्विविधः । यथार्थोऽयथार्थश्च । यथार्थज्ञानजन्यो यथार्थः । भ्रमजन्यो ऽ यथार्थः । संस्कारमात्र-जन्यं ज्ञानं स्मृतिः । यथा – स्मरामि पूर्वदृष्टं सरः । पूर्वदेशकालसंबंधि मानसज्ञानं वा स्मृतिः । सर्वत्रानित्यैव । पूर्वमेवोदाहरणम् । स्मृतिरपि द्विविधा । यथार्थाऽयथार्था चेतिभेदात् । यथार्थसंस्कारजन्या यथार्था । भ्रमजन्याऽयथार्था । स्मृतिपूर्वः परत्र पूर्वदृष्टपरिचयः प्रत्यभिज्ञा । सा केषांचिन्मते यथार्थाऽयथार्थाभेदात् द्विविधा । बहुषु मतेषु यथार्थैव ।

सा पुनर्द्विधा । नित्याऽनित्या चेति । तत्रेश्वरवृत्तिर्नित्या प्रत्यभिज्ञामते । जीववृत्तिरनित्या सर्वत्र । प्रमा वक्ष्यते । ज्ञेयः पदार्थः पंचविधः । सत्ता-धर्मिधर्मोपाध्यभावभेदात् । सर्वत्रानुगाऽस्तित्वव्यवहारहेतुः सत्ता । सा त्रिविधा । पारमार्थिकी व्यावहारिकी प्रातिभासिकी चेति भेदात् । त्रिषु कालेष्वबाध्या पारमार्थिकी । यथा ब्रह्मणः । विना ब्रह्मज्ञानमबाध्या व्यावहारिकी । यथा प्रपंचस्य । ब्रह्मज्ञानं विनाऽपि बाध्या प्रातिभासिकी । यथा शुक्तिरजतादेः । आश्रयो धर्मी । यथा द्रव्यम् । आश्रितो धर्मः । यथा गुणादिः । धर्मी चतुर्विधः । अविकारिसहकारिकारणकार्यभेदात् । नित्योऽपरिणाम्युदासीनोऽविकारी । यथा पुरुषः सांख्यानाम् । कारणेन कार्येण च सहाखंडत्वेन वर्तमानः सहकारी । स द्वेधा । देशः कालश्चेति । ब्रह्माभिन्नः साधारणाश्रयो देशः। स वेदान्तमते आकाशरूपः । सांख्यमते तद्भिन्नः । मुक्तानां देशसंबंधित्वादाकाशस्य चोत्पत्तिमत्वात् । वेदान्तभिन्नसर्वशास्त्रेषु नित्यत्वेनाभ्यु-पगतः । दिग्द्रव्यस्यापि देशेंऽतर्भावः । तदपेक्षत्वात् । धर्मविचारे दिशो-नानात्वम् । कर्माणि नियमदर्शनात् । सांख्यमते गुणोपाधिना कर्मणि व्यवस्था । अतीतादिव्यवहारहेतुः कालः । स वेदान्तमते इंद्रि-यग्राह्यो नित्यः । सांख्यमते इंद्रियाग्राह्यो नित्यः । नैय्यायिकास्तं नित्य-माहुः । तस्य क्षणादिभेद औपाधिकः । यस्मादुत्पद्यते तत्कारणम् । तद्द्वि-विधम् उपादानं निमित्तं चेति । उपादानं त्रिविधम् । आरंभकपरिणामि-विवर्तभेदात् । महदवयव्युत्पादकमारंभकं कारणम् । यथा परमाणवः । स्वरूपपरित्यागेनावस्थांतरजनकं परिणामि । यथा दध्नो दुग्धम् । स्वरूपा-परित्यागेनावस्थांतरजनकं विवर्तम् । तद्वेदान्तिभिरधिष्ठानमित्युच्यते । यथा ब्रह्म । तत्सर्वत्र नित्यम् । निमित्तं द्विविधम् । कर्ताकरणमिति भेदात् । उपादानगोचरज्ञानेच्छाकृतिमान् कर्ता । स द्विविधः । ईश्वरो जीवश्च । विश्वकारणमीश्वरः । कर्मकारणं जीवः । आद्यो नित्योऽन्त्यो यावन्न मुक्तस्ता वदनित्यः । कुलालादिवत् । पूर्वमीमांसामते परमेश्वराभावाज्जीवो नित्यः

कर्ता। व्यापारवदसाधारणं कारणं करणम्। यथा दंडचक्रादिकं घटस्य। विश्वकरणं नित्यम्। इतरदनित्यम्। नैय्यायिकमते कारणं त्रिविधम्। समवाय्यसमवायिनिमित्तभेदात्। उपादानलक्षणकमाद्यम्। समवायिकारणे संबद्धं कारणमसमवायिकारणम्। यथा परमाणुद्वयसंयोगो द्व्यणुकस्य। तंतुरूपं पटरूपस्य। निमित्तकारणमुक्तमेव। एवं सर्वमपि कारणं पुनर्द्वेधा। साधारणमसाधारणं चेति भेदात्। सर्वकार्यकारणं साधारणम्। यथेश्वरादिकम्। प्रतिकार्यकारणमसाधारणम्। यथा घटस्य कुलालः पटस्य तंतुवायः। विश्वकारणं नित्यम्। अन्यदनित्यम्। यदुत्पद्यते तत्कार्यम्। तद्द्विविधम्। प्रकृतिविकृतिरूपं विकृतिरूपं चेति। उत्पन्नमुत्पादकं च प्रथमम्। यथा जलमग्निजन्यं पृथिव्युत्पादकम्। यदुत्पन्नमात्रमन्यानुत्पादकं द्वितीयम्। यथा घटः। सर्वमपि कार्यं पुनस्त्रिविधम्। आरब्धपरिणामविवर्तभेदात्। स्वतो न्यूनावयवेभ्यो जन्यमारब्धम्। यथा परमाणुजन्यो द्व्यणुकः। तंतुजन्यः पटः। उपादानसमसत्ताकोऽन्यथाभावः परिणामः। यथा दुग्धस्य दधि। उपादानविषमसत्ताकोऽन्यथाभावः विवर्तः। स द्विविधः। अध्यस्ताऽनध्यस्तभेदात्। अध्यासनिमित्तकोऽध्यस्तः। तदनिमित्तकोऽनध्यस्तः। अध्यासनिमित्तकोऽध्यस्तविवर्तः रज्जुसर्पादिः। तदनिमित्तकोऽनध्यस्तविवर्तः कनककुंडलादिः। वेदान्ते प्रपंचोऽध्यस्तविवर्तः। मधुराद्वैते भगवद्देहोऽनध्यस्तविवर्तः। अध्यस्तविवर्तोऽनित्योऽनध्यस्तविवर्तो नित्यः। धर्म्यधिकरणवान् धर्म्याधेयो धर्म्याश्रितो धर्मः। स द्विविधः। आरोपितः स्वगतश्चेति। वस्तुन्युपाधिसंपादित आरोपितः। स द्विविधः। आपेक्षिकोऽङ्गीकृतश्च। अपेक्षाजन्य आपेक्षिकः। यथाऽतर्यबाहिष्ठाकारकत्वादिः। बाह्यापेक्षाजन्यमांतर्यम्। अंतरापेक्षाजन्यं बाह्यम्। एवं परत्वापरत्वादौ सर्वत्र योज्यम्। कंचित्कालमभ्युपगतो बौद्धोऽङ्गीकृतः। सपक्षत्वसाध्यत्वहेतुत्वव्यधिकरणत्वादिभेदादनेकविधः। सर्वोऽप्यारोपितो धर्मोऽनित्यः। वस्तुन्युपलब्ध उपाध्यसंपादितो धर्मः स्वगतः। सोऽनेक-

विधोऽपि लाघवादष्टादशविधः । जातिव्यक्त्याकृतिशक्तिलक्षणोपलक्षणविशेषणगुणक्रियाप्रकारविकाराधिकारस्वत्वस्वामित्वसंबंधसंख्यावस्थापेक्षाभेदात् । एकत्वे सत्यनेकानुगतत्वं जातिः । सा द्विविधा । व्याप्यव्यापकभेदात् । व्याप्या घटत्वादि व्यापका द्रव्यत्वादि । वेदान्तभिन्नमते नित्या सा । जातिमत्वे सति जातिपरिच्छिन्ना व्यक्तिः । जात्याश्रयो वा व्यक्तिरिति केचित् साऽनेकविधा । सा नित्यगता नित्याऽनित्यगताऽनित्याऽद्वैतभिन्नमते । जातिलिंगविशेषज्ञापकाऽकृतिः । यथा गोत्वजातिलिंगविशेषज्ञापका सास्नादिमतीयं गौरिति । अवयवसंस्थानाविशेषो वाकृतिः । यथा कंबुग्रीवादिमान् घटः । पातंजलादिमते शक्यार्थाकृतिः । सा सर्वत्राऽनित्या । कार्यभिन्नत्वे सति कार्यानुमेयं कारणाधिकरणवत् कार्यजननसामर्थ्यं शक्तिः । सा मायेति वेदान्तिनो वदंति । कापिलाः प्रकृतिरित्याहुः । नित्येयं सांख्यमते । व्यावर्तकधर्मविशेषो लक्ष्यतावच्छेदकसमानियतत्वं वा लक्षणम् । दोषत्रयविहीनं व्यावर्तकं वा । समुदायात्पृथक्करणं व्यावर्तनम् । यथा धेन्वाः सास्नादिमत्वम् । तद्द्विविधम् । तटस्थलक्षणं स्वरूपलक्षणं चेति । कादाचित्कत्वे सति व्यावर्तकं तटस्थलक्षणम् यथा छत्रवान् राजा । नित्यत्वे सति व्यावर्तकं स्वरूपलक्षणम् । यथा पृथिव्या गंधवत्वं ब्रह्मणः सच्चिदानंदत्वम् । अजहल्लक्षणया ग्राहकं वा कार्येऽसंबद्धं व्यावर्तकमुपलक्षणम् । काकेभ्यो दधि रक्षतामित्यत्र काकपदं काकाऽकाकग्राहकम् । काकवद्गृहं गच्छेत्यत्रातीतकाकत्वमपि गमनेऽसंबद्धं व्यावर्तकम् । काकरहितमपि गृहं व्यावर्तयति । तद्यावन्मोक्ष साद्यनंतमैतिह्यवादिति वेदान्तिनः । मोक्षेऽपि साद्यनंतामिति न्यायमकरंदकृदाह । स्वरूपे प्रविष्टं वर्तमानव्यावर्तकं विशेषणम् । यथा नीलो घट इत्यत्र नीलत्वं वर्तमानघटविशेषणं पीतादिभ्यो व्यावर्तकम् । नित्यगतं नित्यमानित्यगतमानित्यम् कादाचित्कमप्यनित्यमेव दंडिवत् । धर्म्यधिकरणकस्वगतधर्मव्याप्यगुणत्वजातिमत्वे सति गुणानधिकरणवान् गुणः । स रूपरसगंधस्पर्शपरिमाणगुरुत्वद्रवत्वस्नेहादृष्टशब्दभेदात् दशविधः । चक्षु-

मात्रग्राह्यो गुणो रूपम् । तच्च शुक्लनीलपीतरक्तहरितकपिशचित्रभेदात् सप्तविधम् । सांख्ये रूपं द्रव्यं तन्मात्रत्वात् । वेदान्ते न्याये च गुणः । पृथिव्यप्तेजोवृत्तित्वात् । सांख्यवेदान्तयो रूपमनित्यम् । नैय्यायिका नित्यगतं नित्यमनित्यगतमनित्यमित्याहुः । पाकजं रूपं सर्वत्रानित्यम् । रसनाग्राह्यो गुणो रसः । स च मधुरकटुलवणाम्लतिक्तकषायभेदात् षड्विधः । सांख्ये द्रव्यं तन्मात्रत्वात् । वेदान्ते न्याये च गुणः । पृथिवीजलवृत्तित्वात् । यावद्व्यवहारं नित्यः । घ्राणग्राह्यो गुणो गंधः । स द्विविधः । सुरभिरसुरभिश्च । सुरभिः पुष्पादौ । विण्मूत्रादावसुरभिः । सांख्ये द्रव्यं तन्मात्रत्वात् । न्यायवेदान्तयोर्गुणः । पृथिवीमात्रवृत्तित्वात् । सांख्यवेदान्तयोरानित्यः । न्याये नित्यगतो नित्योऽ नित्यगतोऽनित्यः । पृथिवीत्वसमानियतो नित्यः पुष्पादावनित्यः । त्वगिंद्रियमात्रग्राह्यो गुणः स्पर्शः । स च त्रिविधः । शीतोष्णानुष्णाशीतभेदात् । सांख्ये द्रव्यं तन्मात्रत्वात् । वेदान्ते न्याये च गुणः पृथिव्यप्तेजोवायुवृत्तित्वात् । सांख्यवेदान्तयोरानित्यः । न्याये नित्यगतो नित्योऽनित्यगतोऽनित्यश्च । मानव्यवहारासाधारणकारणं परिमाणम् । सर्वधार्मिवृत्ति । तत्त्रिविधमणुविभुमध्यमभेदात् । अवयवधाराविश्रांतिरूपमाद्यम् । सांख्यवेदान्तमतेऽनित्यं न्याये नित्यम् । यथा परमाणौ । तदभावे मेरुसर्षपयोस्तुल्यत्वापत्तिरिति तेषां प्रक्रिया । सर्वव्यापकत्वलक्षणं विभुः । यथा ब्रह्मणः परिमाणम् । सर्वत्र नित्यम् । अणुविभुभिन्नं मध्यमम् । यथा घटादौ दृश्यते । सर्वत्रानित्यम् । ह्रस्वदीर्घयोरेतस्मिन्नेवांतर्भावः । पतनासाधारणकारणत्वे सति आकर्षणजनकं गुरुत्वम् । तच्च सर्वत्र स्थूलेषु दृश्यते । यावत्स्थूलमनित्यं भाति । आकर्षणं न गुणः किन्त्वापेक्षिको धर्मः । सामान्यविशेषयोस्तथा दर्शनात् । लघुत्वमपि न पृथक् गणनीयं न्यूनगुरुत्वापेक्षाजन्यत्वात् । आद्यस्पंदनासाधारणकारणत्वे सत्यार्द्रजनकत्वं द्रवत्वम् । तत् द्विविधम् । सांसिद्धिकं नैमित्तिकं च । सांसिद्धिकं जलादौ । नैमित्तिकमग्निसंयोगाजलसंयोगाद्वा